अज्ञातकर्तृको

# राज्याभिषेकविधिः

सम्पादकः

गयाचरण त्रिपाठी



अज्ञातकर्तृको

# राज्याभिषेकविधिः

*

सम्पादकः

गयाचरण त्रिपाठी

*

श्रीगङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्
चन्द्रशेखर आज़ाद पार्क
प्रयागः
१९९७

## ।। अथ राज्याभिषेकविधिः ।।

*राजधर्मान् प्रवक्ष्यामि यथावृत्तो भवेन्नृपः ।
संभवश्च यथा तस्य[1] सिद्धिश्च परमा यथा ।।

(मनुस्मृतिः ७/१)

धर्मशब्दोऽयं दृष्टादृष्टार्थानुष्ठानपरः । राजशब्दोऽपि क्षत्रियजातिपरः ।

अत्यर्थं राजते यस्मात् पौर्णमास्यां यथा शशी ।
रञ्जनात् सर्वलोकस्य राजेति कवयो विदुः ।।

अराजके हि लोकोऽस्मिन्[2] सर्वतो विद्रुते भयात् ।
रक्षार्थमस्य सर्वस्य राजानमसृजत् प्रभुः ।।

(मनुः ७/३)

ब्राह्मं प्राप्तेन संस्कारं क्षत्रियेण यथाविधि ।
सर्वस्यास्य यथान्यायं कर्तव्यं परिरक्षणम् ।।

(मनुः ७/२)

'यथाविधि' इति विधिस्त्रिविधः । पूर्वस्मिन् राज्ञि वनं गते, तदाज्ञया, स्वरबलेन वेलाबलेन वाऽभिषेकः । परेते पूर्वस्मिन् राज्ञि तत्कालशुद्ध्या सद्योऽभिषेकः । शुद्ध्यनन्तरं[3] च स्वेच्छयाऽभिषेक इति ।।

*तत्राद्यो यथा—*

पङ्ग्वन्धबधिरो मूको दुर्बलो रोगपीडितः ।
पुत्रे राज्यं विनिक्षिप्य[4] राजा तीर्थं समाश्रयेत् ।।

रोगोऽचिकित्स्यो रोगः इति वचनात् ।

सति पूर्वस्मिन्[5] राजाज्ञयाऽभिषेकः । यथा विष्णुपुराणे—

---

* Please note that the unacceptable readings of the Manuscript are given in the footnotes whereas the emendations are incorporated in the main body of the text.

१. यथाक्रम्य ।

२. अराजकेऽस्मिन् लोकेति ।

३. शुद्धनत्तरं ।

४. विनःक्षप्य ।

५. पूर्व ।

पूरोः[१] सकाशादादाय जरां दत्त्वा च यौवनम्।
राज्येऽभिषिच्य पूरुं च[२] प्रययौ तपसे वनम्॥
उदीच्यां च तथैवानुं[३] कृत्वा मण्डलिनो नृपान्।
सर्वपृथ्वीपतिं पूरुं[४] सोऽभिषिच्य वनं ययौ[५]॥

*(विष्णुपुराणम् ४/१०/३०-३२)*

*तृतीयो यथा—*

शवाशौचे व्यतीते तु राज्ञः कुर्याच्छुभे दिने।

*तत्र विधिः—*

स्नात्वा संतर्प्य च प्रेतं मुखलोम[६]-नखान् त्यजेत्।
पुनः स्नात्वा पञ्चगव्यैस्तथा शतपलैः पुनः॥

शतपलैः पञ्चामृतैः। मुखलोमेति वचनात् शिरःकेशादि वपनं न।

तदुक्तम्—

राजा वा राजपुत्रो वा योषितो वनवासिनः।
न तेषां वपनं कार्यं केशधारणमिष्यते॥

ततस्तु पूजयेद्देवं वस्त्राद्यैरुपशोभितम्।
तत्सर्वं धारयेन्मन्त्रैरेष साधारणो विधिः॥

शुद्धिस्तात्कालिकी तस्य[७] पूतो भवति भूपतिः।
राजानो राजभृत्याश्च सद्यःशौचाः प्रकीर्तिताः।
लोकेशाधिष्ठितो राजा नास्याशौचं विधीयते॥[८]

इतिवचनात् सद्य एवाभिषेकः कालासहत्वात्।

अत्र युक्तो ज्येष्ठ एव। तदुक्तम्—

---

१. गुरोः
२. च गुरुं
३. तथैवान्यान्
४. सर्वपृथ्वीपतित्वेऽमुं
५. These verses are found much later in our MS. They have been restored to their proper place.
६. लोक।
७. 'स्तात्कालिकी शुद्ध'।
८. cf. मनुस्मृतिः ५/९७ (पूर्वार्द्धम्)

ज्येष्ठ एव तु गृह्णीयात् पित्र्यं धनमशेषतः ।
शेषास्तमुपजीवेयुर्यथैव पितरं तथा ॥

(मनुः ९/१०५)

ज्येष्ठः कुलं वर्धयति विनाशयति वा पुनः ।
तस्मात्[१] पूज्यतमो लोके ज्येष्ठः सद्भिरगर्हितः ॥

(मनुः ९/१०९)

स एव धर्मतः पुत्रः कामजानितरान् विदुः ।
प्रेतकार्याणि सर्वाणि प्रयत्नेन[२] नियोजयेत् ॥

तच्च दैवज्ञोक्त[३]शुभदिने यथाविधि कार्यम् ।

गुरुशुक्रार्कवारेषु रोहिण्यामुत्तरायणे ।
अभिषेको महेन्द्रस्य कर्तव्यस्तत्त्ववेदिभिः ॥

पुष्टैः शुक्रेन्दुजीवैर्ध्रुवलघुबलभिद्विष्णुमैत्रेन्दुपौष्णैः
सल्लग्ने.... जन्मोदयपतिषु विरन्ध्रा.... गेन्दावसौम्यौ ।
पापारिस्थैरथाष्टव्ययगृहरहितैः सद्ग्रहैः केन्द्रकोणे
वीर्याढ्ये क्षत्रियेशे सुदिनतिथियुतीन्दौ नृपस्याभिषेकः ॥

इति ।

*विधिश्च यथा–*

'केशभस्म तुषाङ्गार-कण्टकास्थिसमाकुलम् ।
भवेन्महीतलं यस्मात्तदर्थं भूमिशोधनम् ॥'

इति वचनात् भूमिं संशोध्य, खातं पञ्चगव्येना[४]सिञ्च्य, "अच्युताय स्वाहा", "भौमाय स्वाहा" इत्याहुतिद्वयं हुत्वा, समाचाराद् अष्टकुलनागान् संपूज्य, पञ्चव्रीहीन्, पञ्चरत्नानि वा निक्षिप्य, "भूरसी" ति (वा० सं० १३/१८, तै० सं० ४/२/९/१) मन्त्रेण मृत्पिण्डं दत्त्वा, "इयं परैतु"[५] इति पठित्वा, पुष्पाञ्जलिं दत्त्वा, नमस्कृत्य, रत्नसिंहासनाय नमः इति यथाशोभं निर्मापयेत्–

---

१. The edition of Nirṇayasāgar (Reprint Chowkhamba, Varanasi 1985) has the reading ज्येष्ठः (for तस्मात्)।
२. प्रत्ययेन ।
३. दैवोक्त ।
४. खाते पञ्चगव्यमासिञ्च्य ।
५. इयं परोतु । I have not been able to trace its source.

अभिषेकस्यावश्यकतया राजोपयोगिद्रव्याणां लक्षणानि संक्षिप्याह—

*सिंहासनम्—*

हैमं सिंहासनं सत्ये त्रेतायां रौप्यमेव च।
द्वापरे ताम्रमित्याहुर्मृत्पाषाणेन वा कलौ ॥

चतुरस्रं वर्तुलञ्च त्रिकोणं च गदाकृतिम्।
सार्धहस्तद्वयं दैर्घ्ये प्रतिवप्रद्वयावृतम् ॥

*इति*

*छत्रलक्षणम्—*

चतुरस्रं भवेच्छत्रमायामं तत्तदर्धकम्।
वर्तुलं श्वेतवस्त्रेण स्वर्णदण्डेन निर्मितम् ॥

*इति*

*चामरलक्षणम्—*

चामरं श्वेतवर्णं स्याद् रौप्यमुष्ट्या सुनिर्मितम्।

*इति*

*खड्गलक्षणम्—*

तीक्ष्णधारस्तु खड्गः स्यात् षट्त्रिंशाङ्गुलसम्मितः।
पञ्चविंशाङ्गुलो वापि स्याच्छुरः शुभलक्षणः ॥

*फलकलक्षणम्—*

हस्तद्वयं तु चर्म स्याद्रौप्यबिन्दुसमन्वितम्।

*अश्वलक्षणम्—*

श्वेतोऽश्वो लक्षणोपेतः सर्वालङ्कारभूषितः।

*वस्त्रलक्षणम्—*

पीतवर्णं च सदशं क्षौमं कार्पासमेव च।
अहतं क्षालितं वस्त्रं परिदध्यान्मनोहरम् ॥

अन्यानि राजचिह्नानि प्रकुर्वीत मनोरमम्।

## ।। अथ परिभाषा: ।।

*पञ्चामृतम्—*

दुग्धं च शर्करा चैव घृतं दधि तथा मधु ।
पञ्चामृतमिति प्रोक्तं पवित्रं सर्वकर्मसु ॥

क्षीरं सप्तपलं प्रोक्तं दधि तद्द्विगुणं स्मृतम् ।
आज्यं तु त्रिगुणं ग्राह्यं मधुशर्करयोस्तथा ॥

*पञ्चगव्यम्—*

गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
पञ्चगव्यमिति प्राहुः पवित्रं कायशोधनम् ॥

गायत्र्या[१] चैव गोमूत्रं 'गन्धद्वारे'ति[२] गोमयम् ।
'आप्यायस्वे'ति[३] च क्षीरं 'दधिक्राव्णे'ति[४] वै दधि ॥
'तेजोऽसि शुक्रमि'[५]'त्याज्यं 'देवस्य त्वा'[६] कुशोदकम् ॥
*इति*

एतद्विधिस्तु कृच्छ्र[७]प्रकरणे लिखितः ।

*पञ्चरत्नानि—*

कनकं कुलिशं नीलं पद्मरागं च मौक्तिकम् ।

*पञ्चपल्लवाः—*

अश्वत्थोदुम्बरप्लक्ष-चूतन्यग्रोधपल्लवाः ।
पञ्चभङ्गा इति प्रोक्ताः सर्वकर्मसु शोभनाः ॥

---

१. ऋ. वे. ३/६२/१० etc.
२. श्रीसूक्तम् (खिलानि, ११) ९ ।
३. ऋ. वे. १/९१/१६, १७ ।
४. ऋ. वे. ४/३९/६ ।
५. वा. सं. २२/१ ।
६. वा. सं. १/१०, २१, २४ etc.
७. कृच्छ्र ।

*सर्वौषधयः—*

मुरा-मांसी-वचा[१]-कुष्टं[२] शैलेयं रजनी[३]द्वयम्।
धात्री[४]-चन्दन[५]-मुस्तं च सर्वौषधिगणः स्मृतः॥

*सप्तमृत्तिकाः—*

अश्वस्थानाद् गजस्थानाद् वल्मीकात् सङ्गमाद् ह्रदात्।[६]
चतुष्पथाच्च गोष्ठाच्च मृत्तिकाः सप्तधा स्मृताः॥

इतराणि तु प्रकृतानुपयोगितया न लिखितानि।

॥ अथ तद्दिनकृत्यम् ॥

*भविष्योत्तरे*[७] —

उत्सवं कारयित्वा तु तौर्यत्रिकपुरःसरम्।
चलत्पताकसौधं तु हेमकुण्डोपशोभितम्॥

पुरं कृत्वाऽभिवादाढ्यं[८] घण्टाघर्घरसंकुलम्।
पौरनारीजनक्षिप्त[९]लाजैः शोभितचत्वरम्॥

चतुर्हस्तप्रमाणेन वेदीं तत्र समे स्थले।
हस्तमात्रं तथा कुर्यादुच्छ्रायेण विचक्षणः॥

मण्डलं कारयेत्तत्र सर्वतोभद्रसंज्ञकम्।
पङ्कजं कारयेन्मध्ये युक्तं कर्णिकया शुभम्॥

श्वेतवस्त्रयुगच्छन्नं चन्द्रातपविभूषितम्।
चामरं तत्र शय्यां च पीठमर्घ्यादिकं न्यसेन्॥

---

१. वग।
२. कुष्ठं।
३. रजवी।
४. शटी।
५. चम्पक।
६. संगमाद्धवात।
७. These verses are not found in the printed edition (Bombay) of Bhaviṣya Purāṇa,
८. °द्याम्।
९. °जनाक्षिप्त।

लक्ष्मीनारायणं देवं रौप्यसिंहासनोपरि।
स्थापयेत् पञ्चदशभिः सुवर्णस्य विचक्षणः।
माषै[१] र्द्वादशभिर्वापि पञ्चभिर्वापि निर्मितम्॥

गौरसर्षपकल्केन समालभ्य तनुं स्वकम्।
राज्ञा स्नानं ततः कार्यमलक्ष्मीनाशनं परम्॥

उद्वृत्य देहं च तथा सर्वौषधियुतैर्जलैः।
स्नानं कृत्वा नवं वस्त्रं गृहीत्वाच्छादनं ततः॥
स्रष्टव्यं मङ्गलशतं गीतवादित्रनर्तनैः॥

ततो नारायणं शुक्रं चन्द्रं चैव बृहस्पतिम्।
ग्रहान् दिगधिपांश्चैव स्वैः स्वैर्मन्त्रैः समीहितः॥

संपूज्य धूपदीपाद्यैर्नैवेद्यैश्च पृथक् पृथक्।
प्रशस्तैर्वैदिकैर्मन्त्रैः कृत्वाऽग्निहवनं शुभम्॥

प्राशनं मार्जनं चैव दक्षिणां तदनन्तरम्।
ग्रामैर्गोभिश्च कनकैर्वासोभिस्तर्पयेद् द्विजान्॥

मङ्गलारोपणं कृत्वाऽभिषिञ्चेत् कलशोदकैः।
दम्पत्योरपि कुर्वीत आशीर्वादमतः परम्॥

अश्वाद्यारोहणो[२] राजा व्रजेद् देवादिदर्शनम्।
पुरप्रदक्षिणां[३] कृत्वा प्रविशेत् प्राङ्मुखः पुनः॥

षडर्घ्यवरणं कृत्वा स्त्रीणां नीराजना ततः।
अन्नं पुष्टिकरं ग्राह्यं प्रभूतघृतपायसम्॥

इति

---

१. मासैः।
२. रोहणे।
३. प्रदक्षिणं पुरः।

## ।।अथ सम्भाराः[१] ।।

होमद्रव्याणि । नवकलशाः । वस्त्रम् । घृतम् । पञ्चामृतम् । पञ्चगव्यम् । पञ्चरत्नानि । पञ्चवर्णचूर्णम् । तण्डुलाः । स्रुव । स्रुक् । नारिकेलफलानि । क्रमुकम् । आम्रादिपल्लवम् । ताम्बूलम् । सप्तमृत्तिका: । सर्वौषधयः । तिलाः । यवाः । दीपाः । दूर्वा । अक्षतानि । भद्रासनम् । शरावाः । सहस्रधारा । पुष्पमाल्यम् । डोहलम्[?] । शुक्लोष्णीषः । चन्द्रातपः । कुशाः । समिधः । पीठम् । देवताः । चन्दनम् । नानाविधनैवेद्यम् । अस्त्रजातम् । अगुरुः । गुग्गुलुः । घण्टा । धूपावली । होमार्थं नदीबालुका । मङ्गलारोपणद्रव्याणि । गोमयम् । यथोक्तदक्षिणादीनि ॥

## ।। अथ क्रमः ।।

पूर्वदिने रात्रौ प्रहराभ्यन्तरे अधिवासः ।

प्रातर्नित्यकृत्यानन्तरं यथोक्तसमये यथोक्तस्थाने प्रथमतः वरुणपूजां कृत्वा, स्वस्तिवाचनम् । संकल्पः । वरणम् । दीपस्थापनम् । स्थण्डिलकरणम् । आचार्यात्मशुद्धिः । देवतायाः पञ्चामृतादिना पूजा । [पञ्च]भूसंस्कारः, अग्निस्थापनानन्तरं वा पूजा । अग्न्यासादनम् । राज्ञः स्थानम् । सिंहासनपूजा । छत्रादिपूजा । मन्त्रपूर्वकं क्षौमवस्त्रादिग्रहणम् । पवित्रकरणादिकं कृत्वा अग्नेर्दशकर्म । यागरक्षा । आघारावाज्यभागहोमः । स्विष्टकृत् । भूरादिपूर्णाहुतिः । प्रार्थना । प्राशनम् । मार्जनम् । दक्षिणादानम् । ब्राह्मणभोजनम् । शान्तिकरणम् । कलशाभिषेकः । मङ्गलारोपणम् । हस्तभूषादिव्यवहारः । नीराजना । अच्छिद्रावधारणम् । आशीर्वादः । ब्रह्मविसर्जनम् । भस्मतिलकग्रहणम् । अश्वारोहणम् । ग्रामप्रदक्षिणम् । पुनः प्रवेशः । षडर्घ्यकरणम् । अन्तःपुरे सपत्नीकाभिषेकः । नीराजना । तौर्यत्रिकादिकतोषणम् ॥

## ।। अथानुष्ठानविधिः ।।

पूर्वदिवसे छायामण्डपे सायं वरुणपूजां कृत्वा शंखतूर्यादिमङ्गलपुरस्सरं गन्धाधिवासः[२], बहिः शालारोपणं[३], हरिद्राधिवासः[४]

---

१. This is a list of the articles to be used in the ritual (after editorial correction of manifold scribal errors!) ।

२. गन्धादिवासं ।

३. शालारोपण ।

४. हरिद्राधिवासाः ।

प्रातर्नित्यकृत्यानन्तरं दैवज्ञोक्तपुण्यसमये राजा ब्राह्मणानुमतः, सुप्रक्षालितपादः, सुवसनः, सुपवित्रसुवर्णमुद्रिकामुद्रितकरः, मङ्गलघोषे क्रियमाणे द्विजान् पुरस्कृत्य होमस्थाने प्रविशेत्।

उपलिप्ते शुचौ देशे नीवारचूर्णमण्डले दीपान् प्रस्थापयेत्, तत्र कलशं वारिपूरितम् आम्रादिपल्लवयुतं दध्यक्षतभूषितं पञ्चरत्न-सर्वौषधि-सप्तमृत्तिकादियुतं[१] वस्त्रवेष्टितग्रीवं सनारिकेल-तण्डुल-शरावपिहितमुखं धान्याधारे स्थापयेत्।

तत्पश्चात् चतुरस्त्रं कुण्डं स्थण्डिलं वा कारयेत्। नित्यनैमित्तिकहोमे स्थण्डिलं कुर्याद्, अन्यत्र अनियमः। स्थण्डिलं च कर्तृहस्तेन[२] हस्तमात्रविस्तीर्णं चतुरङ्गुलसमुच्छ्रितम्। वैश्यस्य द्व्यङ्गुलम्।

तस्येशाने प्रधानदेवतापूजार्थं पञ्चवर्णचूर्णेन मण्डलकरणम्। तत्र खट्वायां रजते वा तूलिकास्थापनम्। पूर्वाद्यष्टदिक्षु दुग्धदध्याज्यशर्करामधुतीर्थ [= तीर्थोदक] फलोदकपुष्पोदकस्थापनम् अष्टकलशेषु। तत्रोपरि फलपुष्पयुतं वितानं बध्नीयात्। होमद्रव्याणां स्थापनम्। समीपे इष्टदेवतां निधाय कायादीन् उपवेश्य मण्डलद्रव्याणां स्थापनम्॥

यजमानाचार्यौ[३] प्राङ्मुखावुपवेश्य ब्रह्माणमुत्तरत उपवेशयेत्। सदस्यादीनामपि तथैवोपवेशनम्।

तत्रादौ कलशान्तरे वरुणपूजा। स्वस्तिवाचनपूर्वकं यजमानस्य संकल्पः, यथा—

गन्धपुष्पाक्षतफलसहितं जलपूर्णं ताम्रपात्रं गृहीत्वा देशकालवाक्यानन्तरम् 'अमुकसगोत्रोऽमुकवर्मा प्रजापालनादियथोक्तराजधर्मानुष्ठानार्थं *ब्रह्माण्डपुराणो*क्तविधिना राज्यभिषेककर्माहं कुर्वीय'। ततो वैकल्पिकावधारणम्॥

स्वयमुत्तराभिमुखः प्राङ्मुखमाचार्यमासनादिनाऽर्चयित्वा गन्धपुष्पाक्षतनारिकेलफलकुण्डलमुद्रिकासहितं वासोत्तरीयवस्त्रं गृहीत्वा वर्मान्तं वाक्यमुच्चार्य मम कर्त्तव्येऽस्मिन् राज्याभिषेककर्मणि आचार्यकर्म कर्त्तुम् अनेन गन्धपुष्पाक्षतनारिकेलफल-कुण्डल-मुद्रिका-सहितेन वासोयुगलेन आचार्यत्वेन त्वामहं [वृणे] इति। यथाविहितेत्यादि। आचार्यं वृत्वा ब्रह्माणं वृणुयात्। 'कर्त्तव्येऽस्मिन् राज्याभिषेकाङ्गहोमकर्मणि कृताकृतावेक्षकत्वेन ब्रह्माणं त्वामहं वृणे' इति विशेषः। एवं यथोक्तकर्मोपदर्शनार्थं सदस्यादीनामपि वरणम्।

ततः कुण्डे स्थण्डिले वा पञ्चभूसंस्कारान् कृत्वा सरस्वती-नामाग्नेः स्थापनम्। लक्ष्मीं ध्यात्वा इध्मदानम्।

---

१. मृत्तिकान्युतम्।
२. कर्तृहस्ते।
३. यजमानाचार्यो।

ततः आचार्यो भूतशुद्धि-प्रणव-मातृकां कृत्वा अर्घ्यसंस्कारं कुर्यात्। तेनोदकेन संभारद्रव्याणि आत्मानं च प्रोक्षयेत् तदर्घं कृत्वा पुनरर्घ्यं कुर्यात्। अत्रैव गणपत्यादि[१]-पूजेति कश्चित्।

तत्र लक्ष्मीनारायणप्रतिमां पञ्चामृतेन स्नापयित्वा, ताम्रपात्रे कृत्वा, रौप्यसिंहासने खट्वोपरि तूलिकां दत्त्वा तदुपरि स्थापयेत्॥ तदुत्तरतः कनकमयीं दुर्गां स्नापयित्वा स्थापनम्।

द्वादशाक्षरमन्त्रेण अष्टाक्षरमन्त्रेण वा 'तद् विष्णो'रिति (ऋ० १/२२/२०) 'त्रीणि पदे'ति (ऋ० १/२२/१८) वैदिकमन्त्रैः षोडशोपचारेण लक्ष्मीनारायणं पूजयेत्॥

द्वादशाक्षरवासुदेवमन्त्रस्य प्रजापतिः ऋषिः, गायत्रीच्छन्दः, परमात्मा देवता, ॐ बीजं, नमः शक्तिः, पूजायां विनियोगः। अक्षरयुग्मैर्हृदयादिषडङ्गानि।

*ध्यानम्—*

शंखचक्रधरं शान्तं नारायणमनामयम्।
लक्ष्मीसंस्थितवामाङ्गं तथाऽभयकरं प्रभुम्॥

किरीटकुण्डलधरं नानामण्डनशोभितम्।
राजत्कौस्तुभमालाख्यं श्रीवत्साङ्कितवक्षसम्॥

पीताम्बरधरं देवं सुरासुरनमस्कृतम्।
स याति सर्वश्रेयांसि विश्वासं कुरु भूपते॥

इति ध्यात्वा बिल्व[२]मुद्रां हृद्देशे दत्वा श्रीधरं देवं गन्धाद्यैर्मानसै[३][रुपचारै]र्यजेत्॥

'सशक्तिबलवाहनाय सायुधाय नारायणाय नमः' इति गन्धपुष्पधूपदीपनैवेद्याचमनताम्बूलैः पूजयेत्।

ततोऽर्घ्यजलेन प्रतिमां संप्रोक्ष्य मन्त्रमष्टधा जप्त्वा मूलेनावाहयेत्।

यथा[विहितं]पुष्पाञ्जलिं गृहीत्वा मूलमुच्चार्य निजदेहात्तेजः स्वदक्षनासारन्ध्रेण बहिष्कृष्य पुष्पाञ्जलौ चिन्तयित्वा प्रतिमायां वामनासारन्ध्रेण प्रवेश्य तत्प्रतिमातेजसोश्चैक्यं[४] चिन्तयेत्॥

---

१. वाणपत्यादि।
२. विल्य।
३. मानस्यै।
४. तेजयो चैक्यं।

आवाहनादि मुद्राचतुष्टयं दर्शयेत्।

ततो मूलेनैव आसनादि-पुष्पाद्युपचारान्तं दद्यात्। आसनादि मुद्रादर्शनम्।।

ततः पूर्वे 'त्रातारमिन्द्रम्' (ऋ० ६/४७/११) इति मन्त्रेण शक्रं पूजयेत्।

एवं दक्षिणे 'सोमं राजानम्' (ऋ० १०/१४१/३) इति सोमम्।

पश्चिमे बृहस्पतिम्। उत्तरे अम्बिकाम्। आग्नेये गणेशम्।

नैऋते क्षेत्रपालम्। वायव्ये भृगून्। ईशाने नारदम्॥

[ततः] अष्टकलशेषु दिक्पालपूजा।

ततो धूपदीपनैवेद्याचमनताम्बूलपुष्पाञ्जलित्रयजपनमस्कारान् कुर्यात्।

ततो गृह्योक्तविधिना आचार्योऽग्निसंस्कारं कुर्यात्। पञ्चभूसंस्कारान् कृत्वाऽग्निमुपसमाधाय, दक्षिणतो ब्रह्माणमुपवेश्य, प्रणीतां[१] परिस्तीर्य गात्रासादने आज्यचरुसमिधामासादनानन्तरम्—

क्षौमवस्त्रद्वयम्। यज्ञोपवीतम्। सुवर्णोत्तरीयम्। स्रजम्। उष्णीषम्। मुकुटम्। अलंकरणम्। छत्रम्। चामरम्। खड्गम्। चर्म। धनुः। शरान्। शर्वलाम्। ध्वजम्। पताकाम्, वीणा-वीर-काहालादिकमासाद्य पूर्वोक्तवेदिकोपरि सपत्नीकं राजानं ब्राह्मणोऽभिषिञ्चेत्॥

*वामनपुराणे*—

"ततश्च कुर्यान्निजजातिधर्मं देशानुशिष्टं कुलधर्ममग्र्यम्॥"

स्वगोत्रधर्मं न हि संत्यजेच्च इति।

*नारदीये*—

'वृद्धाचाराः परिग्राह्यास्तस्माच्छ्रेयोऽर्थिभिर्नरैः'।

इत्यादिवचनादेः देशकुलाचाराद्यविरोधि-शास्त्रप्रसिद्ध-शास्त्रोक्तविधिनैवाभिषेकं कुर्यात्॥

ततः हस्तमात्रोच्छ्रितां चतुर्हस्तपरिमितां वेदीं निर्माय तां चन्द्रातपपुष्पचामरादिना मण्डयित्वा, मध्ये भद्रासनोपरि मृगचर्मास्तीर्य, चतुष्कोणे घृतपूर्णदीपान् प्रज्वाल्य, भद्रासने सपत्नीकं राजानमुपवेश्य, सम्मुखे दर्पणं संस्थाप्य अभिषेकं कुर्यात्।

---

१. प्रणीय।

तद्यथा—

वेदीं चतु:पार्श्वं वस्त्रैराच्छाद्य उपरि सहस्रधारां धृत्वा 'सहस्राक्ष'मन्त्रेण (मानव गृ० सू० २/१४/२६, याज्ञवल्क्य स्मृति: ११/२८९-२८३) अभिषेक:।

प्रथमं मृत्तिकास्नानमौषधैस्तदनन्तरम्।
तत: पञ्चामृतै: स्नानं ततस्तु फलपुष्पकै:॥

सर्वतीर्थोदकैश्चैव तथा तीर्थोदकेन वै।
ततो गन्धादिभि: स्नानमेवं स्नानविधि: स्मृत:॥

*अन्यमते—*

आदौ तीर्थोदकै: स्नानं तत: पञ्चामृतैरपि।
कुशोदकैस्तृतीयं च चतुर्थन्तु फलोदकै:॥

कषायनीरै: पञ्चमं षष्ठं सर्वौषधिजलै:।
सप्तमं गन्धतोयेन तत: शुद्धोदकेन च।

एवमभिषेकानन्तरं क्षौमवस्त्रं परिदध्यान् मन्त्रेण—

"ॐ परिधत्त वाससैन्यं शतायुषं कृणुत दीर्घमायु:।
शतं च जीवामि शरद: सुवर्चा वसूनि गन्धे विभृतासि जीवन्॥

*(हिरण्यकेशी गृ० सू० १.४.२)*

आचम्य यज्ञोपवीतमन्त्रेण ["यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत् सहजं पुरस्तात् आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेज:॥" Ed.] यज्ञोपवीतग्रहणम्॥

द्विराचमनम्॥ 'सुपर्णं वस्ते मृग' इत्युत्तरीय ग्रहणम्—

"सुपर्णं वस्ते मृगो अस्या दन्तो गोभि: संनद्धा पतति प्रभूता।
यत्रो नर: सं च वि च द्रवन्ति तत्रास्मभ्यमिषव: शर्म यंसन्॥"

*(ऋ० वे० ६/७५/११, वा० सं० २९/४८)*

*वस्त्रोत्तरीयग्रहणे—*

"यशसा मा द्यावापृथिवी"ति (पारस्कर गृ० सू० २, ६, २१ मानव गृ० सू० १, ९ २७)।

"या आहरद् [जमदग्नि:]" (पारस्कर गृ० सू० २/६/२३) इति *स्रग्ग्रहणम्।*

"युवा सुवासा [परिवीत आगात]" (ऋ० वे० ३/८/४, मै० सं० ४/१३/२ काठक सं० १५/१२, ऐ० ब्रा० २/२/२९, अन्यत्रापि) *इत्युष्णीषग्रहणम्* ॥

*स्त्रीवस्त्रपरिधाने* "आकूतं चाकूतिश्च" (तै० सं० ३/४/४/२, मै० सं० २/४/१४, पारस्कर गृ० सू० १/४/९) इति मन्त्रः ॥

*मुकुटग्रहणे* मन्त्रः—

हिरण्यशृङ्गोऽयो अस्य पादा मनोजवा अवर इन्द्र आसीत्।
देवा इदस्य हविरद्यमायन् यो अर्वन्तं प्रथमो अध्यतिष्ठत् ॥
*(ऋ० वे० १, १६३, ९, वा० सं० २९/२०, तै० सं० ४/६/७/४)*

"यद्यशोऽप्सरसामिन्द्रः" (पारस्कर गृ० सू० २/६/२४)

इति शिरसि *मालाग्रहणम्*।

"अलङ्करणमसि [भूयोऽलङ्करणं भूयात्"] (पारस्कर गृ० सू० २/६/२६)

इत्यनेन *अलङ्कारान्*।

"वृत्रस्य कनीनकाऽसि" (वा० सं० काण्व ४/२/१) इति *कज्जलम्*,

"समिद्धोऽग्नि" रिति वा[१] ॥

"सिन्धोरिव प्राध्वने शू[धनाशो]"[२] (ऋ० वे० ४/५८/७, वा० सं० १७/९५ कठ सं० ४०/७) इति *सिन्दूरं* गृह्णीयात्।

राजा चाग्नेः पश्चादुपविशति ॥

।। सिंहासनपूजा ।।

ततो आचार्यः सिंहासनं पूजयेत्।

यथा—

स च सामान्यार्घ्यं विधाय सिंहासनं पञ्चगव्यादिना सेचयित्वा— सिंहासनाधारे 'रत्नसिंहासनाय नमः'. तदुपरि कालाग्निरुद्राय, कूर्माय, आधारशक्तये, अनन्ताय, क्षिति-

---

१. There are four Mantras with this *pratīka* in the Vedic literature. It is dificult to decide which one of the following is meant :
समिद्धोऽग्निरश्विना_ अ० वे० ७/७३/२, वा० सं० २०/५५, समिद्धोऽग्निर्दिवि_ ऋ० वे० ५/२८/१, समिद्धोऽग्निर्निहितः पृथिव्याम्_ ऋ० वे० २/३/१, समिद्धोऽग्निः समिधा_ अ० वे० १३/१/२८ वा सं० २१/१२, मै० सं० ३/११/११ का० सं०, तै० ब्रा०।

२. 'सिन्धोरिव प्राध्वनेषु'

मण्डलाय। आग्नेयादिदिक्षु[१]—धर्माय, ज्ञानाय, वैराग्याय, ऐश्वर्याय। पूर्वादिदिक्षु— अधर्माय, अज्ञानाय, अवैराग्याय, अनैश्वर्याय। ऊर्ध्वे[२] 'वास्तोष्पतये ब्रह्मणे नमः' इति गन्धादिभिः पूजयेत्।

ततो 'भूरसी' ति (वा० सं० १३/१८, तै० सं० ४/२/९/१, ७/१/१२/१) मन्त्रेण धरित्रीं पूजयेत्। अर्घ्यदाने विशेषः—

ॐ विष्णुपत्नीं महीं देवीं माधवीं माधवप्रियाम्।
लक्ष्मीं प्रियसखीं देवीं नमाम्यच्युतवल्लभाम्॥

ततो राजा गणपत्यादिदेवेभ्यः पुष्पाञ्जलिं दत्त्वा, प्रदक्षिणमारभ्य...[३] मन्त्रेण सिंहासने प्रविशेत्। सिंहासनस्य दक्षिणपार्श्वे तिष्ठन् "इदं विष्णुः" (ऋ० वे० १/२२।१७, वा० सं० ५/१५, अ० वे० ७/२६/४) इतिमन्त्रेण पादेनारोहणं कुर्यात्।

"भद्रं कर्णेभिः" (ऋ० वे० १/८९/८, वा० सं० २५/२१) इति मन्त्रेण सुखासने उपविशेत्।

[ततः] "उत्तिष्ठ ब्रह्मणस्पते" [वा० सं० ३४/५६], "प्र नूनं ब्रह्मणस्पतिः" [वा० सं० ३४/५७], "ब्रह्मणस्पते त्वमस्य यन्ता" [वा० सं० ३४/५८][४] इति कण्डिका[५] त्रयं पठेत्

ततो *वीणावादनं* कृत्वा गायति[६] "वीणागणगिन उपसमेता भवन्ति। तानध्वर्युः संप्रेष्यति। वीणागणगिनऽइत्याह पुराणैरिमं यजमानं राजभिः साधुकृद्भिः संगायतेति। तं ते तथा संगायन्ती"ति[७] (श० ब्रा० १३/४/३/३) श्रुतेः।

"नर्माय पुँश्चलूं, हसाय कारिं, यादसे शाबल्यां, ग्रामण्यं गणकमभिक्रोशकं तान्महसे वीणावादं पाणिघ्नं तूणवध्मं तान् नृत्तायानन्दाय तलवम्"। (वा० सं० ३०/२०)॥ प्रतिश्रुत्कायेति—

---

१. दिषु।
२. उद्धवे।
३. The mention of the relevant Mantra is missing in the MS.
४. These three Mantras are quoted in the MS in full in a highly corrupt form.
५. कर्णिका।
६. गायत्रि।
७. The whole quote is very corrupt in our MS.

[प्रतिश्रुत्काया अर्तनं घोषाय भषमन्ताय बहुवादिनमनन्ताय मूकं शब्दायाडम्बरघातं महसे वीणावादं क्रोशाय तूणवध्ममवरस्पराय शंखध्मम्...", (वा० सं० ३०/१९)] इति *शंखवादनम्*।[१]

*वीरकाहालवादने* "त्वष्टा वीरम्" (वा० सं० २९/९, तै० सं० ५/१/११/३, मै० सं० ३/१६/२) इति पठेत्।

"उदुत्तममि"ति मन्त्रेण (ऋ० वे० १/२४/१५, वा० सं० १२/१२, अ० वे० ७/८३/२, तै० सं० १/५/११/३ etc.) छत्रं गृहीत्वा देवं समर्प्य राज्ञः सन्निधाने दध्यात् "बृहस्पतेश्छदिरसि पाप्मनो मामन्तर्धेहि, तेजसो यशसो मा अन्तर्धेहि" (पारस्कर गृ० सू० २/६/२९) इति मन्त्रेण।

चामरम्– "अक्षराजाय कितवम्... गोघातमिति" (वा० सं० ३०/१८)

खड्गम्– "असि यमो अस्यादित्यो अर्वन्"... आहुस्ते त्रीणि दिव बन्धनानि" (ऋ० वे० १/१६३/३, वा० सं० २९/२४, तै० सं० ४/६/७/१, कठ० सं० ४०/६) इति।

चर्म– मर्माणि ते वर्मणा छादयामि... जयन्तं त्वानु देवा मदन्तु (ऋ० वे० ६/७५/१८, वा० सं० १७/४९, सा० वे० २/१२२०, अ० वे० ७/११८।१)

धनुः– "त्वं यविष्ठ दाशुषो नॄः पाहि शृणुधी गिरः, रक्षा तोकमुत त्मना" (ऋ० वे० ८/८४/३, वा० सं० १३/५२, १८/७७, सा० वे० २/५९६, मै० सं० २/१३।११ कठ सं० ७/१६, श० ब्रा० ७/५/२/३९), "धन्वना गा धन्वनाजिं जयेम... धन्वना सर्वाः प्रदिशो जयेम (ऋ० वे० ६/७५/२, वा० सं० २९/३९, तै० सं० ४/६/६/१, मै० सं० ३/१६/३, ३/१८५/१२) इति धनुः।

शराः– "वीभत्सायै पौल्कसं, वर्णाय हिरण्यकारं... सं शराय प्रच्छिदम्" (वा० सं० ३०/१७) इति शराः

"अत्रा ते रूपमुत्तममपश्यं जिगीषमाणामिष आ पदे गोः (ऋ० १/१६३/७, वा० सं० २९/१८, वा स० कण्व ३१/३/३० तै० सं० ४/६/७/३) "अनु त्वा रथो अनु मर्यो अर्वन्... ममिरे वीर्यं ते" (ऋ० १/१६३/८, वा० सं० २९/१९ तै० सं० ४/६/७/३) इति द्वाभ्यां ध्वजपताकादि राजचिह्नानि धारयेत्।

अतः परं राजशब्दोच्चारणं कर्त्तव्यम्।

---

१. शंखवादने।

प्रतिनिधिद्वारा राजा नित्य-नैमित्तिककर्म कुर्यात्। काम्ये तु प्रतिनिधिर्नास्तीति आहु:।

तत आचार्य: पवित्रकरणादि—पर्य्युक्षणान्तं कर्म कृत्वा अग्निं पञ्चाक्षरमन्त्रेण संपूज्य *अग्नेर्दश कर्म* कुर्यात्—

"सप्त ते अग्ने सप्त जिह्वा:" (वा० सं० १७/७९, तै० सं० १/५/२/४, मै० सं० १/६/२, कठ सं० ७/१४) इति *गर्भाधानम्*। मरुतनामाग्नये स्वाहा॥ "स्वस्ति न इन्द्र: ..." (ऋ० वे० १/२९/६, वा० सं० २५/९, सा० वे० २/१२२५, मै० सं० ४/९/२७, क० सं० ३५/९) इति *पुंसवने*। चन्द्र नामाग्नयेस्वाहा॥ "समिन्द्रणो मनसा नेषि गोर्भि:" (ऋ० वे० ५/४२/४) इति *सीमन्तोन्नयने*। मङ्गलनामाग्नये स्वाहा॥" प्राणाय मे वर्चोदा वर्चसे पवस्व..." (वा० सं० ७/२७, वा० सं० कण्व ९/१/१, तै० सं० ३/२/३/१) इति *जातकर्मणि*। प्रगग्ज[?]नामाग्नये स्वाहा॥ "काय स्वाहा, कस्मै स्वाहा... विज्ञातादित्यै स्वाहा" (वा० सं० २२/२०, तै० सं० ७/३/१५/१, मैं० सं० ३/१२/५) इति *नामकर्मणि*। पार्थिव-नामाग्नये स्वाहा॥ "अन्नपतेऽन्नस्य नो देहि" (वा० सं० ११/८३, तै० सं० ४/२/३/१, मै० सं० २/१०/१) *इत्यन्नप्राशने*। शुचिनामाग्नये स्वाहा॥ "शिवो नामासि..." (वा० सं० ३/६३ कौ० सू० ५/२/१७, पारस्कर गृ० सू० २/१/११) इति *चूडाकरणे*। षड्य[?]नामाग्नये स्वाहा॥ "व्रतं कृणु व्रतं कृणुताग्निर्ब्रह्माग्निर्यज्ञो वनस्पतिर्यज्ञिय:" (वा० सं० कण्व ४/५/१, वा० सं० ४/११, तै० सं० ६/१/४/४, कठ सं० २/४, २३/५, श० ब्रा० ३/२/२/७) [इति *व्रतबन्धे*][१]। समुद्भवनामाग्नये स्वाहा॥ "आ कृष्णेन रजसा वर्तमान:..." (ऋ० वे० १/३५/२, वा सं० ३३/४३, ३४/३१, तै० सं० ३/४/११/२, मै० सं० ४/१२/६) इति *समावतने*। सूर्यनामाग्नये स्वाहा॥ "त्र्यम्बकं यजामहे सुगन्धिं पतिवेदनम्। उर्वारुकमिव बन्धनादितो मुक्षीय मामुत:" (वा० सं० ३/६०, cf. also ऋ० वे० ७/५९/१२, तै० सं० १/८/६/२, मै० सं० १/१०/४, १/१४४।१२, कठ सं० ९/७, ३६/१४, श० ब्रा० २/६/२/१२, १४) इति *पत्नीसंयोजने*। योजकनामाग्नये स्वाहा॥

ततोऽग्ने:[२] पञ्चोपचारेण पूजनम् पूर्ववत्। रक्षा करणम्। मृतामृतसंज्ञा। आघारावाज्यभागौ हुत्वा पुण्याहवाचनम्।

---

१. Supplied by the Editor.
२. अग्निम्।

"अद्यामुक-सगोत्रस्य[१] अमुकशर्मणो राज्याभिषेकाङ्क्षितया] होमकर्मारम्भः क्रियते" इत्यादि[२] [संकल्पपूर्वकं][३] ऋषिच्छन्दोदेवताविनियोगं कृत्वा मूलमन्त्रेण समिदाज्यचरूणां प्रत्येकम् अष्टोत्तरशतं हुत्वा ग्रह-दिक्पालहोमः । स्विष्टकृत् । भूरादयः ।

"मूर्धानं दिवो अरतिं पृथिव्याः..." (ऋ० वे० ६/७/१, वा० सं० ७/२४, ३३/८, तै० सं० १/४/१३/१, ६/५/२/१ मै० सं० १/३/१५) इति पठित्वा स्वाहा-वौषडन्तो ।[४] यजमानस्यारा[५]त्तिष्ठतो होमः ।

अत्र पृथगाज्यसंस्कारं कुर्वन्ति । तत्र मूलं न पश्यामः ।

चतुर्गृहीतग्रहणं फलपुष्पाक्षतादिसंयोगसमाचारात् । आपावकपूर्णाहुतेरतिदेशे प्रमाण-सत्त्वात् पृथगाज्यसंस्कारः,

"पुनस्त्वादित्या रुद्रा वसवः समिन्धताम्" (वा० स० १२/४४, तै० सं० ४/२/३/४, ५/२/२/५, मै० सं० १/७/१ कठ सं० ८/१४, ३८/१२, श० ब्रा० ६/६/४/१२) इति आहुतिद्वयं समाचारात् ।

"अग्निं प्रज्वलितं वन्दे..." इति प्रार्थना ।

प्राशनं । मार्जनम् ।

तेन कलशेन यजमानस्य होमस्रग्विभूषितस्य ब्राह्मणचतुष्टयेन प्राङ्मुखेनाभिषेकः स्वशाखोक्तमन्त्रैः[६]—

"वायव्यैर्वायव्यान्याप्नोति..." (वा० सं० १९/२७)

"तां सवितु[७]र्वरेण्यस्य चित्राम्..." (वा० सं० १७/७४, तै० सं० ४/६/५/४, ५/४/७/४, मै० सं० २/१०/६)

"अश्विनोर्भैषज्येन तेजसे ब्रह्मवर्चसायाभिषिञ्चामि..." (वा० सं० २०/३, तै० ब्रा० २/६/५/२, आप० श्रौ० सू० १९/९/१३)

"इन्द्रः सुत्रामा हृदयेन[८] सत्यम्..." (वा० सं० १९/८५ मै० सं० ३/११/९, ३/१५३/१२, कठ सं० ३८/३, तै० ब्रा० २/६/४/३)

---

१. अमुकस्य गोत्रस्य ।
२. यदेत्यादि ।
३. Supplied by the Editor.
४. वौषडन्ते ।
५. यजमानान्यारान्धे ।
६. मन्त्रेण ।
७. ताच्चसवितुः
८. हृदये ।

"तेन मामभिषिञ्चामि श्रियै..." (पारस्कर गृ० सू० २/६/११)

"येन श्रियमकृणुताम्[१]..." (पारस्कर गृह्य० २/६/१२)

"सोमस्य त्वा द्युम्नेनाभिषिञ्चामि अग्नेर्भ्राजसा सूर्यस्य वर्चसा इन्द्रस्येन्द्रियेण [+ मरुतामोजसा", (वा० सं० १०/१७, कण्व ११/६/१, श० ब्रा० ५/४/२/२)।

अथैनम् अभिषेकं कृत्वा[२] कृष्णविषाणयानुविनयन्तीति श्रुतेः[३]। स्मार्तमन्त्रैस्तु "सुरास्त्वामभिषिञ्चन्तु" (वराहमिहिरकृत – बृहत्संहिता, ४८/५५-७०) इत्यादि वैकल्पिकमन्त्राभिषेकः[४]।

नागाङ्गनाष्टादशमातरश्च श्रीः शारदा शैलसुताहिपत्न्यः।
एतेऽभिषेकं नृपतेः सपत्न्या मुञ्चन्तु मेघाः कुसुमस्य वृष्टिम्॥

गन्धर्वविद्याधरकिन्नराद्याः दिक्कुञ्जराष्टौ चिरजीविनश्च।
एतेऽभिषेकं नृपतेः सपत्न्या मुञ्चन्तु मेघाः कुसुमस्य वृष्टिम्॥

ग्रहाश्च तारा करणा मुहूर्ताः योगाश्च लग्नास्तिथिराशयश्च।
एतेऽभिषेकं नृपतेः सपत्न्या मुञ्चन्तु मेघाः कुसुमस्य वृष्टिम्॥

गंगादिनद्यः सरितः समुद्रास्तीर्थैरनेकैर्बहुभिर्जलेन।
स्नाने समायान्तु सदा नृयुग्मं मुञ्चन्तु मेघाः कुसुमस्य वृष्टिम्।

अपरं वारद्वयम्॥

अथैनं पूर्वाभिषेकेना[णा]भिपतन्तीति श्रुतेः।

"सविता त्वा प्रसवानां सुवताम् अग्निर्गृहपतीनां सोमो वनस्पतीनाम्। बृहस्पतिर्वाच इन्द्रो ज्यैष्ठ्याय रुद्रः पशुभ्यो मित्रः सत्यो वरुणो धर्मपतीनाम्। इमं देवा असपत्नं सुवध्वं महते क्षत्राय महते ज्यैष्ठ्याय महते जानराज्यायेन्द्रस्येन्द्रियाय। इमममुष्य पुत्रममुष्यै पुत्रमस्यै विशः, एष वः कुरवो राजा सोमोऽस्माकं ब्राह्मणानां राजा" (वा० सं० ९/३९, ४०, वा० सं० कण्व ११/३/१-३, श० ब्रा० ५/३/३/११, ९/४/३/१६, मै० सं० २/६/६, २/६७/१०, कठ सं० १५/५॥

अथैनं दक्षिणबाहुमभिवृत्याभिषिञ्चति—

---

१. मकृत्यताम्।
२. कृष्ण।
३. Cf. ŚB 5.3 4.2 which has अनुविमृष्टे for अनुविनयन्ति।
४. These verses occur in the context of *Pusvaśānti* of the king.

"देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां सरस्वत्यै वाचो यन्तुर्यन्त्रिये दधामि बृहस्पतेष्ट्वा साम्राज्येनाभिषिञ्चामि" (वा० सं० ९/३०) ॥

अथैनं कृष्णाजिनेना[१]भिषिञ्चति। अभिषेकानन्तरं[२] राजत्वमिति भट्टपादैः यजुषो[३]विधानेनाभिषेकः।

ततः पूर्वोक्तजलैः सर्वगन्धैर्यजमानं पृथग् जलेन स्नापयेयुः। सिक्ताम्बराणि परित्यज्य अन्यवासः परिधाय आचम्य मंगलारोपणम्। दक्षिणादानम्। प्रणीताविमोकः। देवता-ब्रह्मविसर्जनम्। अच्छिद्रावधारणम्। विष्णुस्मरणम्। "उप श्वासय पृथिवीमुत द्यां पुरुत्रा ते मनुतां विष्ठितं जगत्। सदुन्दुभे सजूरिन्द्रेण देवैर्दूराद् दवीयो अप सेध शत्रून्" (ऋ० वे० ६/४७/२९, वा० सं० २९/५५) इति तपोराशिप्रदानम्।[४]

तौर्य्यत्रिकादीनां तोषणम्। अतिथिसत्कारः।[५] ज्ञात्यादिभोजनम्।

दक्षिणादानानन्तरं रथं वा, गजं वा, अश्वं वा मण्डयित्वा आरोहणम्। प्रदक्षिणीकृत्य, देवताः दृष्ट्वा, प्राङ्मुखेन पुरं प्रविश्य, मंगललघोषैः 'अप्रतिरथं' (ऋ० वे० १०/१०३, वा० सं० १७/३३-४६, अ० वे० १९/१३ तै० सं० ५/४/६/३, श० ब्रा० ९/२/३/१,५) पठन्, स्नातकवत् षडर्घ्यकरणम्। गृहाभ्यन्तरे पुनः सपत्नीको मंगलाचरण-वन्दापनाऽऽशीर्वादादिकं कुर्यादिति शिष्टाः।

**रथारोहणे–** 'रथे तिष्ठन् नयति वाजिनः पुरः' (ऋ० ६/७५/६, वा० सं० २९/४३, तै० सं० ४/६/६/२)

**हस्त्यारोहणे–** 'अर्मेभ्यो हस्तिपं, जवायाश्वपं...' (वा० सं० ३०/११, तै० ब्रा० ३/४/१/९)

**अश्वारोहणे–** "आ जङ्घन्ति सान्वेषाम्..." (ऋ० वे० ६/७५/१३, वा० सं० २९/५०, तै० सं० ४/६/६/५)।

---

१. कृष्णाजिनोऽभि।
२. अभिषिञ्च्यानन्तरं।
३. यजुषा (could also be यजुषां)।
४. उपस्वात्मयराज्ञसीति तयोराशिप्रदानम्। **The relevant verse from the RV & the VS has been supplied by the Editor.**
५. संस्कारः।

अहःशेषं[1] समानीय इष्टैः शिष्टैश्च बन्धुभिः ।[2]
अनामिषं तु भुञ्जीत राजधर्मान् समाचरेत् ॥

॥ इति राज्याभिषेकविधिः ॥

अभिषेकादिगुणयुक्तस्य राज्ञः प्रजापालनं परमो धर्मः ॥

## ।। अथ राजनीतिः ।।

चत्वारिंशत् समा नीताः सेवया येन वै नृपः ।
ततः सेवां विना तस्मै भृत्यर्धं[3] कल्पयेत् सदा ॥

यावज्जीवं तु तत्पुत्रेऽक्षमे बाले[4] तदर्धकम् ।
भार्यायां वा सुशीलायां कन्यायां वा स्वश्रेयसे ॥

अष्टमांशं पारितोष्यं दद्याद् भृत्याय वत्सरे ।
कार्याष्टमांशं वा दद्यात् कार्यं द्रागधिकं कृतम् ॥

स्वामिकार्ये विनष्टो यस्तत्पुत्रे तद्भृतिं[5] वहेत् ।
यावद्बालोऽन्यथा पुत्रगुणान् दृष्ट्वा भृतिं[5] वहेत् ॥

षष्ठांशं वा चतुर्थांशं भृतेर्भृत्यस्य पालयेत् ।
दद्यात्तदर्धं भृत्याय द्वित्रिवर्षेऽखिलं तु वा ।
वाक्पारुष्यान्न्यूनं[6] भृत्या स्वामी प्रबलदण्डतः ।
भृत्यं प्रशिक्षयेन्नित्यं शत्रुत्वं त्वपमानतः ॥

यथागुणान् स्वभृत्यांश्च प्रजाः संरजयेन्नृपः ।
शाखाप्रदानतः कांश्चिदपरान् फलदानतः ॥

---

१. अहशेषं ।
२. बन्दुभि ।
३. भूत्यर्धं ।
४. ऽक्षमै बले ।
५. भूतिं ।
६. नृप ।

अन्यान् सुचक्षुषा हासैस्तथा कोमलया गिरा।
सुभोजनैः सुवसनैस्ताम्बूलैश्च धनैरपि ॥

कांश्चित् सुकुशलप्रश्नैरधिकारप्रदानतः।
वाहनानां प्रदानेन योग्याभरणदानतः ॥

छत्रातपत्रचामरदीपिकानां प्रदानतः।
क्षमया प्रणिपातेन मानेनाभिगमेन च ॥

सत्कारेण च ज्ञानेन ह्यादरेण शमेन च।
प्रेम्णा समीपवासेन स्वार्धासनप्रदानतः।
सम्पूर्णासनदानेन स्तुत्योपकारकीर्तनान् ॥

(शुक्रनीति २/४१३-४२५)

यत्कार्ये विनियुक्ता ये कार्याङ्कैरङ्कयेच्च तान्।
लोहजैस्ताम्रजैरीतिभवै रजतसंभवैः ।
सौवर्णै रत्नजैर्वापि यथायोग्यैः स्वलाञ्छनैः।
प्रविज्ञानाय दूरात्तु वस्त्रैश्च मुकुटैरपि।
वाद्यवाहनभेदैश्च भृत्यान् कुर्यात् पृथक् पृथक्।
स्वविशिष्टं च यच्चिह्नं न दद्यात् कस्यचिन्नृपः ॥

दशप्रोक्ता पुरोधाद्या ब्राह्मणाः सर्व एव ते।
अभावे क्षत्रिया योज्यास्तदभावे तथोरुजाः।
नैव शूद्रास्तु संयोज्या गुणवन्तोऽपि पार्थिवैः ॥

भागग्राही क्षत्रियस्तु साहसाधिपतिश्च सः।
ग्रामपो ब्राह्मणो योज्यः कायस्थो लेखकस्तथा ॥

शुल्कग्राही तु वैश्यो हि प्रतिहारश्च पादजः।
सेनाधिपः क्षत्रियस्तु ब्राह्मणस्तदभावतः ॥

न वैश्यो न च वै शूद्रः कातरश्च कदाचन।
सेनापतिः शूर एव योज्यः सर्वासु जातिषु ॥

(शुक्रनीति २/४२६-४३२)

विद्यया कर्मणा शीलैः प्रजाः संरजयन् मुदा।
त्यागी च सत्त्व[१] संपन्नः सर्वान् कुर्याद् वशे स्वके।
शनैः शनैः प्रवर्द्धेत शुक्लपक्षमृगाङ्कवत्।
एवंवृत्तो नरपतिः[२] राज्यं प्राप्याप्यकंटकम्।
सहायवान् महामात्यश्चिरं भुंक्ते वसुन्धराम्॥

*(शुक्रनीति २/५०, ५१)*

प्रजानां रक्षणं दानमिज्याध्ययनमेव वा।
विषयेष्वप्रसक्तिश्च क्षत्रियस्य समासतः॥

*(मनुः १/८९)*

क्षत्रियस्यापि यो धर्मस्तं वक्ष्यामि नराधिप।
दद्याद्राजा न याचेत यजेत न च याजयेत्॥

नाध्यापयेदधीयीत प्रजाश्च परिपालयेत्।
नित्योद्युक्तो दस्युवधे रणे कुर्यात् पराक्रमम्॥

ये तु क्रतुभिरीजानाः श्रुतवन्तश्च पार्थिवाः।
ये तु युद्धे विजेतारस्ते तु लोकजितो नृपाः॥

*(पद्मपुराणम्)*

अविक्षतशरीरो हि संगराद् यो निवर्तते।
क्षत्रियस्य तु तत्कर्म नोभयत्र यशःप्रदम्॥

दानमध्ययनं यज्ञो राज्ञां क्षेमोऽभिधीयते।
तस्माद् राज्ञा महाराज द्रष्टव्यं(यष्टव्यं) धर्मशालिना।
प्रजाः स्वेषु (तु) धर्मेषु स्थापयेच्च महीपतिः।
धर्म्याण्येव हि कर्माणि कारयेत् सततं प्रजाः॥
परमां सिद्धिमाप्नोति नृपतिः परिपालनात्॥

*(पद्मपुराणम्)*

---

१. सत्य।
२. राजपत्रो in Chawkhamba Ed.

बहुनात्र किमुक्तेन संक्षेपादुच्यते मया।
प्रजापालनकृद्राजा कदाचिन्नावसीदति ।।

(पद्मपुराणम्)

युयुत्सा गर्हिता सद्भिः सम्मानैः सन्धिरुत्तमः ।
मृत्युर्जयो वा युद्धेषु राजन्यानां वरानने ।।
अलोभी स्यात् प्रजावित्ते गृह्णीयात् सम्मितं करम् ।
रक्षन्नंगीकृतं धर्मं पुत्रवत् पालयेत् प्रजाः ।।

(इति कालिकातन्त्रम्)

न्याय्यं युद्धं तथा सन्धिं कर्माण्यन्यानि यानि च
मन्त्रिभिः सह कुर्वीत विचार्य सर्वथा नृपः ।
धर्मयुद्धेन योद्धव्यं, न्याय-दण्ड-पुरस्क्रियाः ।
करणीया यथाशास्त्रं, सन्धिं कुर्याद् यथाबलम् ।।

उपायैः साधयेत् कार्यं युद्धं सन्धिञ्च शत्रुभिः ।
उपायानुगता सर्वा जयक्षेमविभूतयः ।।

स्याद् नीचसंगाद् विरतः सदा विद्वज्जनप्रियः
धीरो विपत्तौ दक्षश्चं शीलवान् सम्मितव्ययी ।
निपुणो दुर्गसंस्कारे शस्त्रशिक्षाविचक्षणः ।
स्वसैन्यभावान्वेषी स्यात् शिक्षयेद् रणकौशलम् ।।

न हन्यान् मूर्च्छितान् युद्धे त्यक्तशस्त्रान् पराङ्मुखान् ।
बलान्नीतान् रिपून् देवि रिपुदारशिशूनपि ।।

जयलब्धानि वस्तूनि सन्धिप्राप्तानि यानि च ।
वितरेत्तानि सैन्येभ्यो यथायोग्यविभागतः ।।

(कालिकातन्त्रम्)

शौर्यं वृत्तं च योद्धॄणां ज्ञेयं राज्ञा पृथक् पृथक् ।
बहुसैन्याधिपं नैकं कुर्यादात्महिते रतः ।।

नैकस्मिन् विश्वसेद् राजा नैकं न्याये नियोजयेत्।
साम्यं क्रीडोपहासञ्च नीचैः सह विवर्जयेत्॥

बहुश्रुतः स्वल्पभाषी जिज्ञासुर्ज्ञानवानपि।
बहुमानोऽपि निर्दम्भो धीरो दण्डप्रसादयोः॥

स्वयं वा चरदृष्ट्या वा प्रजाभावान् विलोकयेत्।
एवं स्वजन-भृत्यानां भावान् पश्येन्नराधिपः॥

क्रोधाद् दम्भात् प्रमादाद् वा सम्मानं शासनं तथा
सहसा नैव कर्तव्यं स्वामिना तत्त्वदर्शिना।
सैन्य-सेनाधिपामात्य-वनितापत्यसेवकाः ।
पालनीयाः, सदोषाश्चेद् दण्ड्या राज्ञा यथाविधि॥

उन्मत्तानसमर्थांश्च बालांश्च मृतबान्धवान्।
पीडाभिभूतान् वृद्धांश्च रक्षयेत् पितृवन्नृपः॥

*(कालिकातन्त्रम्)*

त्रयो धर्मा निवर्तन्ते ब्राह्मणात् क्षत्रियं प्रति।
अध्यापनं याजनं च तृतीयश्च प्रतिग्रहः।
रक्षणं क्षत्रियस्यैव विशिष्टं सर्वकर्मसु॥

*(मनुः १०/७७)*

ब्राह्मं प्राप्तेन संस्कारं क्षत्रियेण यथाविधि
सर्वस्यास्य यथान्यायं कर्तव्यं परिरक्षणम्
शस्त्रास्त्रभृत्त्वं क्षत्रस्य जीवानार्थं [प्रकल्पितम्]

*(मनुः ७/२, १०/७९)*

दण्डः शास्ति प्रजाः सर्वाः दण्ड एवाभिरक्षति।
दण्डः सुप्तेषु जागर्ति दण्डं धर्मं विदुर्बुधाः॥
यदि न प्रणयेद् राजा दण्डं दण्ड्येष्वतन्द्रितः।
शूले मत्स्यानिवापक्ष्यन् दुर्बलं बलवत्तराः॥

*(मनुः ७/१८, २०)*

स्वराष्ट्रे न्यायवृत्तः स्यात् भृशदण्डश्च शत्रुषु।
सुहृत्स्वजिह्मः स्निग्धेषु ब्राह्मणेषु क्षमान्वितः ।।

(मनुः ७/३२)

तस्य भृत्यजनं ज्ञात्वा स्वकुटुम्बान् महीपतिः।
श्रुतशीले च विज्ञाय वृत्तिं धर्म्यां प्रकल्पयेत्
कल्पयित्वाऽस्यवृत्तिं च रक्षेदेनं समन्ततः।
राजा हि धर्मषड्भागं तस्मात् प्राप्नोति रक्षितात्।

(मनुः ११/२२, २३)

क्षत्रियो बाहुवीर्येण[1] तरेदापदमात्मनः ।।

(मनु०, ११/३४ पूर्वार्द्धम्)

ये नियुक्तास्तु कार्येषु हन्युः कार्याणि कार्यिणाम्।
धनोष्मणा पच्यमानास्तान् निःस्वान् कारयेन्नृपः ।।

(मनुः ९/२३१)

वार्षिकान्[2] चतुरो मासान् यथेन्द्रोऽभिप्रवर्षति।
तथाभिवर्षेत् स्वं राष्ट्रं कार्यैरिन्द्रव्रतं चरन्।।
अष्टौ मासान् यथाऽऽदित्यस्तोयं हरति रश्मिभिः।
तथा हरेत् करं राष्ट्रात् नित्यमर्कव्रतं हि तत्।

(मनुः ११/३०४-३०५)

रक्षणादार्यवृत्तानां कण्टकानां च शोधनात्
नरेन्द्रास्त्रिदिवं यान्ति प्रजापालनतत्पराः।

(मनुः ९/२५३)

स्वाम्यमात्यौ पुरं राष्ट्रं कोषदण्डौ सुहृत्तथा।
सप्त प्रकृतयो ह्येताः सप्तांगं राज्यमुच्यते ।।

(मनुः ९/२९४)

---

१. बहुवीर्येण।
२. कर्षकान्।

चारणोत्साहयोगेन क्रिययैव च कर्मणाम्।
स्वशक्तिं परशक्तिं च नित्यं विद्यान् महीपतिः ।।
(मनुः ९/२९८)

आरभेतैव कर्माणि श्रान्तः श्रान्तः पुनः पुनः।
कर्माण्यारभमाणं हि पुरुषं श्रीर्निषेवते ।।
(मनुः ९/३००)

दत्त्वा धनं तु विप्रेभ्यः सर्वदण्डसमुत्थितम्
पुत्रे राज्यं समासृज्य कुर्वीत प्रायणं रणे ।।
(मनुः, ९/३२३)

परिपूर्णं यथा चन्द्रं दृष्ट्वा हृष्यन्ति मानवाः।
तथा प्रकृतयो यस्मिन् स चान्द्रव्रतिको नृपः ।।
(मनुः ९/३०९)

कूटशासनकर्तृंश्च प्रकृतीनां च दूषकान्।
स्त्री-[बाल]-ब्राह्मणघ्नांश्च, हन्याद् द्विट्सेविनस्तथा ।।
(मनुः ९/२३२)

षाड्गुण्यं संप्रवक्ष्यामि तद्वरौ सन्धिविग्रहौ
सन्धिश्चविग्रहश्चैव यानमासनमेव च।
द्वैधीभावः संश्रयश्च षड्गुणाः संप्रकीर्तिताः ।।
पणबद्धः स्मृतः सन्धिरपकारस्तु विग्रहः।
जिगीषोः शत्रुविजये यानं यात्राभिधीयते ।।
विग्रहेण स्वके देशे स्थितिरासनमुच्यते।
बलादर्धेन प्रयाणस्तु द्वैधीभावः स उच्यते।
उदासीनो मध्यमो वा संश्रयात् संश्रयः स्मृतः ।।

राजा क्षत्रिय इत्युक्तः प्रजापालनतत्परः।
सत्यं दानं विष्णुभक्तिस्तथा ब्राह्मणसेवनम् ।।

दर्पो विरोधो नियतं युद्ध सामग्री[ग्रि]-संग्रहः ।
परिखाकरणं चैव चारेण राज्यदर्शनम् ।
मन्त्रिभिर्मन्त्रणं चैव चारेण राज्यदर्शनम् ।
बहुभिर्मन्त्रणात्यागो न चैकेनापि मन्त्रणा ।[१]
सदावधानदण्डश्च विचार्य सूक्ष्मचक्षुषा ।
शास्त्रादरो विप्रभक्तिर्ब्राह्मणान्यकरग्रहः ।
शोको विषादो मोहश्च व्ययशंका च मूर्खता ।
त्याज्याः राज्ञा इमे दोषाः प्रजासु सुप्रसन्नता ॥

*(बृहद्धर्मपुराणम् २/३/१-५)*

शिष्ये गुरुमतिक्रान्ते पुत्रे पितरमेव च ।
स्वामिनं च स्त्रियाम्[२] राजा दण्डकर्ता भवेद् द्विजः ॥
ब्राह्मणं दुस्तरं ज्ञात्वा तत्र दण्डं न कारयेत् ।
न वध्यो ब्राह्मणो विप्रः, स्त्रीः वृद्धो बाल एव च ॥
यश्चरेदशुभं कर्म पापं विप्रविगर्हितम् ।
पातकेषु निवर्तेत निग्रहस्तस्य कारणात् ॥
शिरसो मुण्डनं कृत्वा गोमयेनोपलेपयेत्
नगरं खरयानेन भ्रामयेद् दण्डमेव च ॥

क्षत्रियस्य च यो दण्डस्तं वक्ष्याम्यानुपूर्विकम् ।
परद्रव्याभिहरणे परदाराभिमर्षणे ।
छेदयेद् हस्तपादौ च कर्णनासादिकर्त्तनम् ॥
सर्वस्वहरणं कृत्वा परराष्ट्रे विसर्जयेत् ।
क्षत्रियस्य हि दुष्टस्य दण्ड एष विधीयते ॥

वैश्यस्यापि च यो दण्डस्तं प्रवक्ष्यामि मे शृणु ।
क्रूरेषु पातकेष्वेव यस्तु वैश्यः प्रवर्तते ।
परदारे परस्वे च तस्य निग्रहमादिशेत् ॥

---

१. चैकमन्त्रणामपि ।
२. स्त्रिया ।

शूलेन भेददण्डस्तु वृक्षशाखावलम्बनम्।
एष वैश्यस्य दण्डः स्यात् शूद्रस्य शृणु वर्ण्यते॥

कुले शूद्रस्य यो दुष्टस्तथैवास्य वधः स्मृतः।
कुञ्जरेणाभिमर्देत मूषायामथि पातयेत्॥

(बृहद्धर्म पु० २/३/२०-३१)

श्रेयोऽर्थी सततं राजा ब्रह्मवृत्तिं न लंघयेत्।
स्वदत्तां परदत्तां वा ब्रह्मवृत्तिं हरेत्तु यः।
षष्टिवर्षसहस्राणि स विष्ठासु कृमिर्भवेत्॥
शास्त्रज्ञसङ्गं नृपतिः कुर्यान्नित्यं न चान्यथा।
वेदागमपुराणज्ञान् ब्राह्मणांस्तु विशेषतः।
ज्योतिर्विदोऽपि नृपतिर्न कदापि परित्यजेत्॥

(बृहद्धर्म पु० २/३/३४,३९, ४०)

वर्तेत युद्धसामग्र्या प्रस्तुतो नृपतिः सदा।
धान्यतण्डुलवस्त्रादेः कोषान् कुर्यात् पृथक् पृथक्॥
तथा चाक्षौहिणीबद्धं सैन्यं रक्षेत सर्वदा।
व्ययशंकां युद्धशंकां संत्यजेन्नृपतिः सदा॥
बहुभिर्न वसेद्राजा वियुक्तो नापि शस्त्रकैः।
अल्पां निद्रां तु सेवेत भोजनं तु मितं चरेत्॥
सदा स्वस्त्ययनी तिष्ठेद् विप्रपूजारतः सदा।
भ्रातरं पुत्रवर्गञ्च दद्यान्न प्रश्रयं क्वचित्॥

(बृहद्धर्मपुराणम् २/३/४२,४८,५२,५४)

राज्यस्थः क्षत्रियश्चैव प्रजाधर्मेण पाल्यते।
कुर्यादध्ययनं सम्यक् यजेद् यज्ञान् यथाविधि॥

दद्याद्दानं द्विजाग्र्येभ्यो धर्मबुद्धिसमन्वितः।
स्वदारनिरतो नित्यं परदारविवर्जितः[१]
नीतिशास्त्रार्थकुशलः सन्धिविग्रहतत्त्ववित्।
देवब्राह्मणभक्तश्च पितृकार्यपरस्[२] तथा॥

धर्मेणैव जयाकांक्ष्यधर्मं परिवर्जयेत्[३]॥

(नृसिंहपुराणम् ५८/२-५)[४]

न लोभाद् वा न कामाद् वा न नार्थाद् वा यस्य मानसम्।
एनोभिः कृष्यते वत्स स राजा स्वर्गमृच्छति॥

(मार्कण्डेयपुराणम् २४/२९)

न्यायेनार्जनमर्थस्य वर्धनं रक्षणं चरेत्।
सत्पात्रप्रतिपत्तिश्च राजवृत्तं चतुर्विधम्॥

न्यायस्य विनयो मूलं विनयः शास्त्रनिश्चयात्
विनयो हीन्द्रियजयस्तैर्युक्तो पालयेन्महीम्।
शास्त्रं प्रज्ञा धृतिर्दाक्ष्यं प्रागल्भ्यं धारयिष्णुता।
उत्साहवाग्मितौदार्यमापत्काले सहिष्णुता॥

प्रभवः शुचिता मैत्री त्यागः सत्यं कृतज्ञता।
कुलं शीलं दमश्चेति गुणाः सम्पत्तिहेतवः॥

---

१. संभोगे निरतः सदा।
२. पितृकार्ये रतः।
३. जयाकांक्षयधर्मं तु विवर्जयेत्।
४. The amended readings in this excerpt have been taken from the critical edition of the Narasiṃha P. prepared by Dr. S. Jena (Nag Publishers, Delhi 1987).

प्रकीर्णविषयारण्ये धावन्तं विप्रमाथनम्।
ज्ञानाङ्कुशेन कुर्वीत वश्यमिन्द्रियदन्तिनम्॥

कामः क्रोधस्तथा लोभो हर्षो मानो मदस्तथा।
षड्वर्गमुत्सृजेदेनमस्मिन्त्यक्ते सुखी नरः।
प्रजाः समनुगृह्णीयात् कुर्यादाचारसंस्थितिम्।
वाक् सूनृता दया दानं दीनोपगतरक्षणम्।

*(अग्निपुराणम् २३८/१-७, ११, १४)*

[इति वृत्तं सतां साधुहितं सत्पुरुषव्रतम्॥
न हि स्वसुखमन्विच्छन् पीडयेत् कृपणं जनम्
कृपणः पीड्यमानो हि मन्युना हन्ति पार्थिवम् ] [१]

□□□

१. Supplied by the editor from the printed edition of this Purāṇa to complete the quotation since the MS ends abruptly.

